योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥६५॥
युक्तस्य सर्वदाभानं चिन्तासहकृतोऽपरः।

योगज इति। योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थः। युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥६५॥

युक्तस्येति युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादि निखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति, द्वितीयस्य तु चिन्ताविशेषोपि सहकारीति।

इति श्री विश्वनाथ पञ्चानन भट्टाचार्य विरचितायां सिद्धान्तमुक्तावल्यां प्रत्यक्ष परिच्छेदः समाप्तः।

अवश्य मानना चाहिये। "योगज" अलौकिक सन्निकर्ष युक्त-युञ्जान-के भेद से दो प्रकार का है। योगाभ्यास से उत्पन्न हुवा "योगज अलौकिक सन्निकर्ष" रूप धर्मविशेष श्रुति-पुराण आदि से प्रतिपाद्य है। युक्त-युञ्जान-रूप योगी दो प्रकार के हैं-अतःउनका धर्म जो योगज है-वह भी दो प्रकार का है। इससे यह सिद्ध हुवा कि एक युक्त योगी होता है--दूसरा युञ्जान योगी होता है—उसमें भी युक्त योगी को योगज धर्म की सहायता से युक्त मन के द्वारा आकाश-परमाणु आदि सकल पदार्थों का ज्ञान सर्वदा ही होता रहता है और दूसरे युञ्जान योगी को आकाश-परमाणु आदि समस्त पदार्थों का ज्ञान चिन्ताविशेष (ध्यान विशेष) करने पर ही होता है।

श्री ज्वालाप्रसाद विरचित सिद्धान्त मुक्तावली भाषाटीका प्रत्यक्ष खण्ड समाप्त।

---

तत्राप्यतिशयो दृष्टः स्वस्वार्थानतिलंघनात्।

स्थूलसूक्ष्मादिबुद्धौ स्यात् न रूपे श्रोत्रवृत्तितेति प्रशस्तदेवः अस्यार्थः— तत्र = योगाभ्यासजनितधर्मविशेषे। अतिशयोपि = सामर्थ्यविशेषोपि। दृष्टः = प्रमितः। स्वस्वार्थानतिलंघनादिति लाब्लोये पञ्चमी स्वस्वर्थाननतिलंघ्येत्यर्थः। तत्तदिन्द्रिययोग्ययावदर्थान्विषयीकृत्येत्यर्थः। उक्ताऽर्थमेव विवृणोति। स्थूलसूक्ष्मादिति। बुद्धौ = प्रत्यक्षे। सामर्थ्यविशेषाभावमुपपादयति। न रूपे इति। स्यादिति। नास्तीत्यर्थः। श्रोत्रवृत्तिता।

ज्वालाप्रसादकृते प्रत्यक्षे च सविस्तरे समाप्तिमगमच्चैव मुक्तावलिविलासनी।